मां यदुच्छिष्टमभोज्यं यद्वादुश्चरितंमम सर्व्वम्पुनन्तुमांमापो सता
ञ्च प्रतिग्रहꣳ स्वाहा ॥३॥ ॐ अग्निश्चमामन्न्युश्चमन्न्युपतयश्च
मन्न्युकृतेभ्यःपापेभ्योरक्षन्ताम् यदह्नापापमकार्षं मनसावाचाह
स्ताभ्याम् पद्भ्यामुदरेण शिश्ना अहस्तदवलुम्पतु यत्किञ्चिद्दुरितंम
यि इदमहमाममृतयोनौ सत्येज्योतिषि जुहोमिस्वाहा ॥४॥ ॐ
आपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन । महेरणायचक्षसे ॥५
॥योवःशिवतमोरसस्तस्यभाजयतेहनः । उशतीरिवमातरः ॥६॥

तस्माऽअरङ्गमामवोयस्यक्षयायजिन्वथ॥ आपोजनयथाचनः
॥७॥ ॐसुमित्रियानऽआपऽओषधयःसन्तु दुर्म्मित्रियास्त
स्मैसन्तुयोस्मान्द्वेष्टियञ्चवयन्द्विष्मः॥८॥ ॐद्रुपदादिवमुमु
चानःस्विन्नःस्नातोमलादिव॥ पूतम्पवित्रेणेवाज्यमापःशुन्धन्तु
मैनसः॥९॥ ॐऋतञ्चसत्यञ्चाभीद्धात्तपसोध्यजायत ततोरा
त्र्यजायततत:समुद्रोअर्णवः समुद्रादर्णवादधिसंवत्सरोऽअजा
यत अहोरात्राणिविदधद्विश्वस्यमिषतोवशी सूर्य्याचन्द्रमसौ

धातायथापूर्वमकल्पयत् दिवञ्चपृथिवीञ्चान्तरिक्षमथोस्वः॥१०
॥ॐ उद्वयन्तमसस्परिस्वः पश्यन्तऽउत्तरम्। देवन्देवत्रासूर्य्यमग
न्मज्ज्योतिरुत्तमम्॥११॥ॐ उदुत्यञ्जातवेदसन्देवंवहन्तिकेतवः
॥ दृशेविश्वायसूर्य्यम्॥१२॥ॐ चित्रन्देवानामुदगादनीकञ्चक्षु
र्म्मित्रस्यवरुणस्याग्नेः॥आप्राद्यावापृथिवीऽअन्तरिक्षꣳसू
र्य्यऽआत्माजगतस्तस्थुषश्च॥१३॥ॐ तच्चक्षुर्देवहितम्पुरस्ताच्छु
क्रमुच्चरत्॥पश्येमशरदःशतञ्जीवेमशरदःशतꣳशृणुयामशर

दे॑ः श॒तम्प्र॑ब्र॒वाम श॒रदः॑ श॒तमदी॑नाः स्स्याम श॒रदः॑ श॒तम्भूय॑श्च श॒
रदः॑ श॒तात् ॥१४॥ ॐ तेजो॑सि शु॒क्रम॒मृत॑मायु॒ष्पा ऽ आयु॑र्म्मे पाहि। दे॒
वस्य॑त्वा सवि॒तुः प्र॑स॒वे॑ऽश्विनो॑र्ब्बा॒हुभ्या॑म्पू॒ष्णो हस्ता॑भ्या॒माद॑दे ॥१५॥
ॐ दे॒वा गा॑तुविदो गा॒तुं वि॒त्वा गा॒तुमि॑त। मन॑सस्पत ऽ इ॒मन्दे॑व य॒ज्ञ ७ं
स्वाहा॒ वाते॑ धाः ॥१६॥ ॥अथ तर्प्पणमन्त्राः॥ ॥आय॑न्तु नः पि॒त-
रः॑ सो॒म्यासो॑ऽग्नि॒ष्वा॒त्ताः प॒थिभि॑र्द्दे॒व॒यानैः॑ । अ॒स्मिन्य॒ज्ञे स्व॒धया॒ म
द॒न्तोऽधि॑ब्रुवन्तु॒ ते॑ऽवन्त्व॒स्मान् ॥१॥ उदी॑रता॒मव॑र॒ ऽ उत्परा॑स॒ ऽ उन्म॑ध्य॒

माऽ पितरः सोम्म्यासः॥असुंय्यऽईयुरवृकाऽऋतज्ञास्तेनोवन्तु पितरो
हवेषु॥२॥अङ्गिरसोनः पितरोनवग्ग्वाऽअथर्व्वाणोभृगवः सोम्म्या
सः तेषांव्वयꣳसुमतौयज्ञियानामपिभद्रेसौमनसेस्याम॥३॥आय
न्तुनः पितरः स्स्मान्॥४॥ऊर्ज्जंव्वहन्तीरमृतङ्घृतम्पयः कीलालम्प
रिस्स्रुतम् स्वधास्थतर्प्पयतमे पितॄन्॥५॥पितृभ्भ्यः स्वधायिभ्भ्यः
स्वधानमः पितामहेभ्भ्यः स्वधायिभ्भ्यः स्वधानमः प्रपितामहेभ्भ्यः



स्वधायिभ्भ्यः स्वधानमः अक्षन्पितरोमीमदन्तपितरोतीतृपन्तपित

रः पितरः शुन्धध्वम् ॥६॥ येचेहपितरोयेचनेहयाँश्चविद्मयाँ२॥

ऽउचनप्रविद्म॥त्वंवेत्थयतितेजातवेदः स्वधाभिर्य्यज्ञꣳसुकृत

ञ्जुषस्व॥७॥मधुवाताऽऋतायतेमधुक्षरन्तिसिन्धवः॥माद्ध्वी

र्न्नः सन्त्वोषधीः॥८॥मधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः

मधुद्यौरस्तुनः पिता॥९॥मधुमान्नोव्वनस्पतिर्म्मधुमाँ२॥

ऽअस्तुसूर्य्यः माद्ध्वीर्ग्गावोभवन्तुनः॥नमोवः पितरोरसायन

मोवः पितरः शोषायनमोवः पितरोजीवायनमोवः पितरः स्व

धायैनमोवः पितरो घोरायनमोवः पितरो मन्यवेनमोवः पितरः
पितरोनमोवो गृहान्नः पितरोदत्तसतोवः पितरो देष्मैतद्वः पित
रोव्वासः॥११॥ अथपूजनमंत्राः॥ अथासनमंत्रः॥ पृथ्वीत्वया
धृतालोकादेवीत्वंविष्णुनाधृता॥त्वञ्चधारयमांदेविपवित्रंकुरु
चासनं भूमिशुद्धिमंत्रः ॐमहीद्यौःपृथिवीचनऽइमंय्यज्ञम्मि
मिक्षताम्॥पिपृतान्नोभरीमभिः॥१॥ भूतशुद्धिमंत्रः॥ॐये
भूतानामधिपतयोव्विशिखासःकपर्दिनः॥तेषांछंसहस्रयो

जनेव धन्न्वानि तन्न्मसि ॥२॥ मातृका मंत्रः ॥ ॐ अम्बेऽ अ
म्बिके अम्बालिके न मानयति कश्चन ॥ ससंस्त्यश्वकः सुभ
द्रिकाङ्काम्पीलवासिनीम् ॥३॥ प्राणप्रतिष्ठा मंत्राः ॥ ॥ ॐ अयम्पु
रो भुवस्तस्य प्राणो भौवायनो व्वसन्तः प्राणायनो गायत्री
व्वासन्ती गायत्र्यै गायत्रङ्गायत्रादुपा छंशुरुपा छं शोस्त्रिवृत्त्रि
वृत्तो रथन्तरंव्वसिष्ठऽ ऋषिः प्रजापति गृहीतया त्वया प्राणङ्गृ
ह्णामि प्रजाभ्यः ॥४॥ अयन्दक्षिणा व्विश्वकर्म्मा तस्य मनो

धैश्वकर्म्मणङ्ग्रीष्मो मानसस्त्रिष्टुब्ग्रैष्मी त्रिष्टुभः स्वारꣳ स्वाराद सं.
न्तर्य्यामोन्तर्य्यामात्पञ्चदशः पञ्चदशाद्बृहद्बृहतो भरद्वाज ऽऋषिः प्र
जापतिगृहीतया त्वया मनो गृह्णामि प्रजाभ्यः ॥५॥ अयम्पश्चा
द्विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसं वर्षाश्चाक्षुष्यो जगती
वार्षी जगत्या ऽऋक्सम मृक्समाच्छुक्रः शुक्रात्सप्तदशः
सप्तदशाद्वैरूपञ्जमदग्निर्ऋषिः प्रजापतिगृहीतया त्वया ५
चक्षुर्गृह्णामि प्रजाभ्यः ॥६॥ इदमुत्तरात्स्वस्तस्य श्रोत्रꣳ

सौवं०.शर्च्छौत्र्यनुष्टुप्प्प्‌ गरद्युनुष्टुभंऽ एडमैडान्म्ंथीमुथ्निनंऽ
एकविं०.शऽऐकविं०.शाद्वैराजस्त्विरश्वामित्रऽऋषिः प्प्रजाप
तिगृहीतयात्वया श्रोत्रं॑गृह्णामि प्प्रजाभ्यः॥७॥ इयमुपरिमु
तिस्तस्यैवाङ्मात्याहे मन्तोव्वाच्यः पङ्क्तिः हैमन्तीपङ्क्तिं नि
धनंन्निधनेवतऽ आग्ग्रयणऽ आग्ग्रयणात्त्रिणवत्रयस्त्रिं०.
शौत्त्रिणवत्रयस्त्रिं०.शाभ्यां शाक्वररैवत्तेव्विश्वकर्म्मऽ
ऋषिः प्प्रजापतिगृहीतयात्वया व्वाचं॑गृह्णामि प्प्रजाभ्यो लो

कन्ताऽइन्द्रम्॥८॥ ॥पञ्चगव्यमंत्राः॥ ॥ॐतत्सवितु÷र्व्यात्
॥९॥गन्धद्वारांदुराधर्षां नित्यपुष्टांकरीषिणीम्॥ईश्वरींसर्वभूतानां
तामिहोपह्वयेश्रियम्॥१०॥आप्यायस्वसमेतुतेविश्वत÷सोम
वृष्ण्यम्॥भवावाजस्यसंगथे॥११॥दधिक्राव्णोऽअकारिषं
जिष्णोरश्वस्यवाजिन÷॥सुरभिनोमुखाकरत्प्रणऽआ
यूंषितारिषत्॥१२॥घृतम्मिमिक्षेघृतमस्ययोनिर्घृतेश्रि
तोघृतम्वस्यधाम॥अनुष्वधमावहमादयस्वस्वाहाकृ

तंवृषभव्वक्षिहुव्यम् ॥१३॥ देवस्यत्वासवितुः प्प्रसवेश्विनो
र्ब्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥१४॥ ॥देवतोत्थापनमंत्राः॥
ॐ उत्तिष्ठब्रह्मणस्पते देवयन्तस्त्वेमहे॥ उपप्प्रयन्तुमरुतः सुदा
नवः इन्द्रप्प्राशूर्भवासचा ॥१५॥ प्रतिष्ठामंत्रः॥ ॐ मनोजूतिर्ज्जु
षतामाज्ज्यस्यबृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टंय्यज्ञꣳ समिम
न्दधातु॥ व्विश्वेदेवास इहमादयन्तामोꣳप्प्रतिष्ठ ॥१६॥ आवाह
नमंत्रः॥ धामच्छदग्निरिन्द्रोब्रह्मादेवोबृहस्पतिः॥ सचेतसोवि

श्वेदेवायज्ञम्प्रावेन्तुनः शुभे॥१७॥ आसन मंत्रः॥ ॐ त्वंअविष्ठ
दाशुषोनृंः पाहिशृणुधीगिरः ॥रक्षोतोकमुतत्मना॥१८॥ ॥अर्घम
न्त्रः॥ॐ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात्॥सभूमिंऽ
सर्व्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम्॥१९॥ ॥आचमनमंत्रः॥ॐ
शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये॥शंय्योरभिस्रवन्तु
नः॥२०॥ ॥स्नानमंत्रः॥ॐ आपोहिष्ठामयोभुवस्तानऽऊ
र्ज्जेदधातन॥महेरणायचक्षसे॥२१॥योवः शिवतमोरसस्त

स्स्यै भाजयतेह नः ॥ उशतीरिव मातरः ॥२२॥ तस्म्मा ऽ अरङ्गमामवो
यस्य क्षयाय जिन्न्वथ ॥ आपो जनयथा च नः ॥२३॥ ॥ अथ पंचा
मृतस्नानमंत्राः॥ तत्र पयोमंत्रः ॥ ॐ पयः पृथिव्यां पय ऽ ओषधीषु
पयो दिव्यन्तरिक्षे पयो धाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ॥
॥२४॥ दधिमंत्रः ॥ ॐ दधिक्राव्णो ऽ अकारिषं जिष्णोरश्वस्य वा
जिनः । सुरभिनो मुखा करत्प्रण ऽ आयूᳪषि तारिषत् ॥२५॥ ॥ घृत
मंत्रः ॥ ॐ घृतम्मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्म्वस्य

धामे॥अनुष्वधमावेहमादयेस्वस्वाहाकृतंवृषभवक्षिहव्यम्॥२६
॥मधुमंत्रः॥ॐमधुवाताऋतायतेमधुक्षरन्तिसिन्धवः॥माध्वीर्न्नः
सन्त्वोषधीः॥२७॥मधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः।मधु
द्यौरस्तुनःपिता॥२८॥मधुमान्नोवनस्पतिर्म्मधुमाꣳ२॥ऽअस्तु
सूर्य्यः माध्वीर्ग्गावोभवन्तुनः॥२९॥ ॥शर्करामंत्रः॥ॐअपाꣳ
रसमुद्वयसꣳसूर्य्येसन्तꣳसमाहितम्।अपाꣳरसस्ययोरस
स्तंवोगृह्णाम्म्युत्तममुपयामगृहीतोसीन्द्रायत्वाजुष्टंगृह्णाम्म्येषते

योनिरिन्द्रायत्त्वाजुष्टतमम्॥३०॥ ॥पुनःशुद्धोदकस्नानमंत्रः॥ॐ
सद्योजातम्प्रपद्यामिसद्योजातायवैनमः॥ भवे भवेनातिभवेभवस्वमांभवो
द्भवायनमः॥३१॥ ॥वस्त्रमंत्रः॥ ॐ युवासुवासाःपरिवीत ऽआगा
त्स ऽउश्रेयान्भवतिजायमानः तं धीरास्सः कवय ऽउन्नयन्तिस्वाध्यो३
मनसादेवयन्तः॥३२॥ अथ यज्ञोपवीत मंत्रः॥ ॐ यज्ञोपवीतंपर
मंपवित्रम्प्रजापतेर्यत्सहजंपुरस्तात्। आयुष्यमग्र्यंप्रतिमुञ्चशुभ्रं
यज्ञोपवीतंबलमस्तुतेजः॥३३॥ ॥अथ सुगन्धिद्रव्य मंत्रः॥ ॐ

अहिरिव भोगैः पर्य्येति बाहुं ज्याया हेतिम्परिबाधमानः ॥ हस्तघ्नो सं.
विश्वा वयुनानि विद्वान्पुमान्पुमांसं परि पातु विश्वतः ॥ ॥
चंदनमंत्रः ॥ ॐ त्वाङ्गन्धर्व्वा ऽअखनँस्त्वामिन्द्रस्त्वां बृहस्पतिः
॥ त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत ॥३५॥ ॥ अक्षत
मंत्रः ॥ ॐ अक्षन्नमीमदन्तह्यव प्रिया ऽअधूषत ॥ अस्तोषत स्व
भानवो विप्रा नविष्ठया मती योजान्विन्द्र ते हरी ॥३६॥ ॥ पुष्पमं- ९
त्रः ॥ ॐ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्। मुखं किम

स्यासीत्किम्बाहूकिमूरूपादाऽउच्येते॥३७॥ ॥बिल्वमंत्रः॥त्र्यंम्ब
कंयजामहे सुगन्धिम्पुष्टिवर्द्धनम्।उर्वारुकमिवबन्धनान्मृत्योर्म्मु
क्षीयमामृतात्॥३८॥ ॥तुलसीमंत्रः॥ॐ इदंविष्णुर्विचक्रमेत्रेधा
निदधेपदम्॥समूढमस्स्य पाᳪसुरे स्वाहा॥३९॥ ॥दूर्वामंत्रः॥ॐ
काण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि एवानोदूर्वेप्रतनुस
हस्त्रेणशतेनच॥४०॥ ॥धूपमंत्रः॥ॐ धूरसि धूर्व धूर्वन्तन्धूर्वतंय्यो
स्म्मान्धूर्वतितन्धूर्वयंवयन्धूर्वामः॥देवानामसिवह्नितमᳪसस्नि

तमुम्पप्रितमग्नुष्टुतमन्देवहूतेमम्॥४१॥ दीपमंत्रः॥ ॐ अग्निर्ज्ज्यो
तिर्ज्ज्योतिरग्निः स्वाहा सूर्य्यो ज्ज्योतिर्ज्ज्योतिः सूर्य्यः स्वाहा।
अग्निर्वर्च्चो ज्ज्योतिर्वर्च्चः स्वाहा सूर्य्यो वर्च्चो ज्ज्योतिर्वर्च्चः स्वा
हा॥ ज्योतिः सूर्य्यः सूर्य्यो ज्ज्योतिः स्वाहा॥४२॥ ॥नैवेद्यमंत्रः॥
ॐ अन्नपतेन्नस्य नो देह्यनमीवस्य शुष्मिणः॥ प्रप्रदातारं तारि
षऽऊर्ज्जन्नो धेहि द्विपदे चतुष्पदे॥४३॥ ॥फलमंत्रः॥ ॐ याः
फलिनीर्य्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः। बृहस्पति

प्रसूतास्तानोमुञ्चन्त्वꣳहसः॥४४॥ ॥दक्षिणामंत्रः॥ॐहिर
ण्यगर्भः समवर्त्तताग्रे भूतस्यजातः पतिरेकऽआसीत्। सदा
धारपृथिवीन्द्यामुतेमाङ्कस्मै देवायहविषा विधेम॥४५॥पुष्पा
ञ्जलिमंत्रः॥ ॐयज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमा
न्यासन्। तेहनाकम्महिमानः सचन्तयत्रपूर्वे साध्याः सन्ति
देवाः॥४६॥ ॥आर्त्तिमंत्रः॥ ॥आरात्रिपार्थिवꣳरजः पितुर
प्रायिधामभिः। दिवः सदाꣳसिबृहतीवितिष्ठसऽआत्वेषं

वर्त्तितमः॥४७॥ ॥अथस्वस्त्ययनमंत्राः॥ ॥हरिः॒ॐ स्वस्ति
नऽइन्द्रो॑वृद्धश्र॑वाः स्वस्तिनः॑पूषाव्विश्ववे॑दाः॥स्वस्तिनस्ता
र्क्ष्योऽअरि॑ष्टनेमिः स्वस्तिनो॒बृहस्पति॑र्द्दधातु॥१॥पयः॑पृथिव्व्या
म्पय॒ऽओषधीषुपयो॑दिव्व्यन्तरि॑क्षेपयो॑धाः।पय॑स्वतीः॒प्प्रदि
शः॑सन्तुमह्य॑म्॥२॥व्विष्णो॑ररा॑टमसिविष्णोः॒श्नप्त्रे॑स्थोव्वि
ष्णोः॒स्यूर॑सिव्विष्णोर्ध्रुवो॑सि।व्वैष्णवम॑सिव्विष्णवे॑त्वा॥३॥अग्नि
र्द्देवतावातो॑देवतासूर्य्यो॑देवताचन्द्रमा॑देवताव्वस॑वोदेवतारुद्रा

देवता दित्या देवता मरुतो देवता व्विश्श्वे देवा देवता बृहस्प्पतिर्द्देवतेन्द्रो
देवता व्वरुणो देवता ॥४॥ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शा
न्तिरापः शान्तिरोषधयः शान्तिः ॥ वनस्प्पतयः शान्तिर्व्विश्श्वे दे
वाः शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः सा
मा शान्तिरेधि ॥५॥ व्विश्श्वानि देव सवितर्दुरितानि परासुव ॥ यद्भद्र
न्तन्न ऽआसुव ॥६॥ इमा रुद्राय तवसे कपर्द्दिने क्षयद्वीराय प्प्रभरा
महे मतीः । यथा शमसद्द्विपदे चतुष्प्पदे व्विश्श्वं पुष्टङ्ग्रामे ऽअस्स्मि

णायच॥२॥सुत्रस्त्यऽऋहिंरुस्यगंन्त्मज्ज्योतिंरमृताऽअभू

म। दिवंमृथिव्व्याऽअद्ध्यारुहामाविंदामदेवाँन्त्स्वज्ज्योतिंः।३।

द्योः शान्तिंरेधि॥४॥ ॥अथकलशस्थापनमंत्राः॥ भूस्पर्शः॥

भूरंसि भूमिंरुस्यदिंतिरसिव्विश्श्वधायाव्विश्श्वंस्स्यभुवंन

स्स्य धुर्त्री॥ पृथिवींय्यंच्छपृथिवींन्दृंऽहपृथिवींमाहिंऽसीः

॥१॥ धान्यप्र० मंत्रः॥ धान्न्यमसिधिनुहिदेवान्प्राणायत्वोदा

नायंत्वाव्व्यानायत्वा॥दीर्घामनुप्प्रसिंतिमायुषेधान्देवोवंः स

विताहिरण्यपाणिः। प्रतिगृभ्णात्वच्छिद्रेणपाणिनाचक्षु
षेत्वामहीनाम्पयोसि॥२॥ ॥कलशस्थापनमंत्रः॥३॥ आ-
जिंघ्रकलशम्मह्या त्वाविशन्त्विन्दवः पुनरूर्ज्जानिवर्त्त
स्वसानः सहस्रन्धुक्ष्वोरुधारापयस्वतीपुनर्म्माविशताद्रयिः
॥३॥ ॥जलमंत्रः॥ ॥वरुणस्योत्तम्भनमसिवरुणस्यस्कं
म्भसर्ज्जनीस्थोवरुणस्यऽऋतसदन्यसिवरुणस्यऽऋ
तसदनमसिवरुणस्यऽऋतसदनमासीद॥४॥वसोः पवि

मं॰ त्रेमसिशतधारंव्वसोःपवित्रमसिसहस्त्रधारम्। देवस्त्वा सं॰
१४ सवितापुनातुव्वसोःपवित्रेणशतधारेणसुप्वाकामधुक्षः।५।
फलमंत्रः॥ ॥याःफलिनीर्य्याऽअफलाऽअपुष्पायाश्चपु
ष्पिणीः बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वꣳहसः॥६॥प
ञ्चरत्नमंत्रः॥ परिवाजपतिःकविरग्निर्हव्यान्यक्रमीत्॥द
धद्रत्नानिदाशुषे॥७॥ ॥हिरण्यमंत्रः॥ ॥हिरण्यगर्भःस १४
मवर्त्तताग्रेभूतस्यजातःपतिरेकऽआसीत्॥सदाधारपृथि

वीन्द्यामुतेमाङ्कस्म्मैदेवायहविषांविधेम ॥८॥ ॥गंधमंत्रः॥
त्वाङ्गन्धर्व्वाअंखनँस्त्वामिन्द्रस्त्वाम्बृहस्स्पतिः॥त्वामोषधेसो
मोराजोविद्वान्न्यक्ष्म्मादमुच्च्यत॥९॥ ॥ओषधीमंत्रः॥ याऽ
ओषधीःसोमराज्ञीर्ब्बह्वीःशतविचक्षणाः॥तासामसित्वमुत्तमा
रङ्कामोयशर्ठहृदे॥१०॥ ॥मृत्तिकामंत्रः॥स्योनापृथिविनोभ
वानृक्षरानिवेशनि।यच्छानःशर्म्मसप्प्रथाः॥११॥ ॥दूर्वामं
त्रः॥ ॥काण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्स्परि॥एवानो

दूर्वेप्रतनुसहस्रेणशतेनच॥१२॥ ॥अश्वत्थपत्रमंत्रः॥ ॥अ-
श्वत्थेवोनिषदनम्पर्णेवोवसतिष्कृता गोभाजऽइत्किलासथ
यत्सनवथपूरुषम्॥१३॥ ॥धान्यपूर्णमंत्रः॥पूर्णादर्विपरापत
सुपूर्णापुनरापत॥वस्नेवविक्रीणावहाऽइषमूर्ज्जꣳशतक्र
तो॥१४॥ ॥आवाहनमंत्रः॥तत्वायामिब्रह्मणावन्दमानस्त-
दाशास्ते यजमानोहविर्भिः॥अहेडमानोवरुणेहबोध्युरुश
ꣳसमानऽआयुःप्रमोषीः॥१५॥अथषोडशमातृकामंत्राः॥

अथ गौरीमंत्रः॥ ॐ शर्म्मास्यवधूतꣳरक्षोवधूताऽअरातयो
दित्यास्त्वगसि प्रतित्वा दितिर्वेत्तु॥ अद्रिरसिवानस्पत्योग्रा
वासि पृथुबुध्नः प्रतित्वादित्यास्त्वग्वेत्तु॥१॥ अथपद्मायै। ॐ
पावकानः सरस्वती वाजेभिर्व्वाजिनीवती॥ यज्ञंवष्टु धि
यावसुः॥२॥ अथशच्यै॥ निवेशनः सङ्गमनोवसूनांविश्वा
रूपाभिचष्टेशचीभिः॥ देवऽइवसवितासत्त्यधर्म्मेन्द्रोनतस्थौसमरे
पथीनाम्॥३॥ अथ मेधायै॥ ॐ मेधाम्मेवरुणोददातुमेधामग्नि

प्प्रजापतिः॥मेधामिन्द्रश्च्चवायुश्च्चमेधान्धातादेदातुमेस्स्वाहा
॥४॥अथसावित्र्यै॥ॐसुविता त्वोसवानो छंसुवताम् अग्निर्गृ
हपतीना छंसोमोवनस्प्पतीनाम्॥बृहस्प्पतिर्वाच्चऽइन्द्रोज्ज्यै
ष्ठायरुद्रःपशुभ्भ्योमित्त्रःसत्त्योवरुणोधर्म्मपतीनाम्॥५॥
अथविजयायै॥ॐप्प्राणायस्स्वाहोपानायस्स्वाहाव्यानाय
स्स्वाहा॥अम्बेऽअम्बिकेम्बालिकेनमानयतिकश्च्चन॥ससे
स्त्यश्वकःसुभद्रिकाङ्काम्पीलवासिनीम्॥६॥ ॥अथजयायै

ॐ बह्वीनाम्पिताबहुरस्यपुत्रश्चिश्चाकृणोतिसमनावगत्य
॥इषुधिः सङ्काः पृतनाश्चसर्वाः पृष्ठेनिनद्धोजयतिप्रसूतः॥
॥७॥ अथदेवसेनायै॥ ॐ इन्द्रऽआसान्नेताबृहस्पतिर्दक्षि
णायज्ञः पुरऽएतुसोमः॥ देवसेनानामभिभञ्जतीनाञ्जयन्ती
नाम्मरुतोयन्त्वग्ग्रम्॥८॥ ॥अथस्वधायै॥ ॐ पितृभ्यः
स्वधायिभ्यः स्वधानमः पितामहेभ्यः स्वधायिभ्यः
स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधानमः॥

मंत्र १७

अक्षन्पितरोमीमदन्त पितरोतीतृपन्त पितरः पितरः शुन्धं सं.
ध्वम्॥९॥ स्वाहायै॥ ॐ स्वाहा प्राणेभ्यः साधिपतिकेभ्यः
पृथिव्यैस्वाहाग्नयेस्वाहान्तरिक्षायस्वाहा वायवेस्वाहा
।दिवेस्वाहा सूर्य्यायस्वाहा॥१०॥ ॥मातरायै॥ ॐ अग्ना
धृता पुरस्तादग्नेराधिपत्यऽआयुर्म्मेदाः पुत्रवती दक्षिणत
ऽइन्द्रस्याधिपत्ये प्रजाम्मेदाः॥ सुषदा पश्चाद्देवस्यस १७
वितुराधिपत्येचक्षुर्म्मेदाऽआश्रुतिरुत्तरतो धातुराधिपत्ये

रायस्पोषम्मेदाः विधृतिरुपरिष्टाद्बृहस्पतेराधिपत्यऽओ
जोमेदाविश्वोभ्योमानाष्ट्राभ्यस्पाहिमनोरश्वासि॥११॥
लोकमातरायै॥ ॐ रयिश्चमेरायश्चमेपुष्टञ्चमेपुष्टिश्चमे
विभुचमेप्रभुचमेपूर्णञ्चमेपूर्णतरञ्चमेकुयवञ्चमेक्षितञ्च
मेन्नञ्चमेक्षुच्चमेयज्ञेनकल्पन्ताम् ॥१२॥ ऋध्यै नमः॥ ॐ
भद्रङ्कर्णेभिः शृणुयामदेवाभद्रम्पश्येमाक्षभिर्यजत्राः॥
स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहिदेवहितंयदायुः

।।१३।।पुष्ट्यैनमः।।ॐ अङ्गान्न्यात्मन्भिषजातदश्विनात्मा
नमङ्गैःसमधात्सरस्वती।।इन्द्रस्यरूपꣳशतमानमायुश्च
न्द्रेणज्योतिरमृतन्दधानाः।।१४।।तुष्ट्यैनमः।।ॐ जातवेदसे
सुनवामसोममरातीयतो निदहाति वेदः सनःपर्षदतिदुर्गाणि
विश्वानावेवसिन्धुंदुरितात्यग्निः।।१५।।अथ कुलदेवता
यै।।ॐ तत्सवितुःपात्।।ॐ वसोःपवित्रमसिशतधारम्व
सोःपवित्रमसिसहस्रधारम्।।देवस्त्वासवितापुनातुवसोः

पवित्रैणशतधारेणसुप्वाकामंधुक्षः॥१॥अथनवग्रहमंत्रः॥
आकृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतम्मर्त्यञ्च॥हिरण्य
येनसवितारथेनादेवोयातिभुवनानिपश्यन्॥१॥इमन्देवाऽ
असपत्नꣳसुवद्ध्वंमहतेक्षत्त्रायमहतेज्ज्यैष्ठ्यायमहतेजानरा
ज्ज्यायेन्द्रस्स्येन्द्रियाय॥इमममुष्ष्यपुत्त्रममुष्ष्यैविशऽएष
वोमीराजासामोस्स्माकम्ब्राह्मणानाꣳराजा॥२॥अग्नि
र्म्मूर्द्धादिवःककुत्पतिःपृथिव्याऽअयम्॥अपाꣳरेताꣳसि

सिजिन्वति॥३॥ॐ उद्बुध्यस्वाग्ग्ने प्प्रतिजागृहित्त्वमिष्टापूर्त्ते
सर्ठ॰सृजेथामयञ्च॥अस्मिन्त्सधस्त्थेऽअद्ध्युत्तरस्मिन्विे
श्वेदेवायजमानश्चसीदत॥४॥बृहस्प्पतेऽअतियदर्य्योऽअ
र्हाद्द्युमद्विभातिक्क्रतुमज्जनेषु॥यद्दीदयच्छवसऽऋतप्प्रजात
तदस्म्मासुद्द्रविणन्धेहिचित्रम्॥५॥अन्नात्परिस्स्रुतोरस
म्ब्रह्मणाव्व्यपिबत्क्षत्रम्पयःसोमम्प्रजापतिः॥ऋतेनसत्य
मिन्द्रियंव्विपानर्ठ॰शुक्क्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयो

मृतम्मधु॥६॥ शन्नोदेवीरभिष्टयऽआपो भवन्तुपीतये॥शय्यो
रभिस्त्रवन्तुनः॥७॥कयानश्चित्रऽआभुवदूतीसदावृधः
सखा॥कयाशचिष्ठयावृता॥८॥केतुङ्कृण्वन्न केतवे पेशो म
र्य्याऽअपेशसे॥समुषद्भिरजायथाः॥९॥ अथनवग्रहाधि
देवतामंत्राः॥त्र्यम्बकंयजामहेसुगन्धिम्पुष्टिवर्द्धनम्॥उर्वा
रुकमिवबन्धनान्मृत्योर्म्मुक्षीयमामृतात्॥१॥श्रीश्चतेल
क्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम्

दिह॥१॥अप्स्वग्नेसधिष्टवसौषधीरनुरुध्यसे॥गर्भेसञ्जायसे
पुनः॥२॥स्योनापृथिविनोभवानृक्षरानिवेशनि॥यच्छानःशा
र्म्मसप्रथाः॥३॥इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम्॥समू
ढमस्यपाथंसुरेस्वाहा॥४॥त्रातारमिन्द्रमवितारमिन्द्रंहवेहवे
सुहवंशूरमिन्द्रम्॥ह्वयामिशक्रम्पुरुहूतमिन्द्रंस्वस्तिनोमघ
वाधात्विन्द्रः॥५॥अदित्यैरास्नासीन्द्राण्याउष्णीषः॥पूषासि
घर्म्मायदीष्व॥६॥प्रजापतेनत्वदेतान्यन्न्योविश्वारूपाणि

परिताबंभूव॥यत्कामास्तेजुहुमस्तन्नोऽअस्त्वयममुष्य्पितासा
वस्स्यपितावयथ्स्यामपतयोरयीणाथ्स्वाहा॥७॥नमोस्तुसर्प्पे
भ्योयेकेचपृथिवीमनु॥येऽअन्तरिक्षेयेदिवितेभ्यः सर्प्पेभ्यो
नमः॥८॥ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेन
ऽआवः॥सुबुध्न्याऽउपमाऽअस्स्यविष्ठाःसतश्चयोनिमसत
श्चविवः॥९॥अथगणेशादिपंचदेवतामंत्राः॥गणानान्त्वा
गणपतिꣳहवामहेप्रियाणान्त्वाप्रियपतिꣳहवामहेनिधी

नान्त्वा निधिपतिँ हवामहे वसो मम॥ आहमजानि गर्ब्भधमा
त्वमजासि गर्ब्भधम्॥१॥ अम्बेऽ अम्बिके म्बालिके न मा नयति क
श्चन॥ ससस्त्यश्श्वकः सुभद्द्रिकाङ्काम्पीलवासिनीम्॥२॥ घा
तौ वामनौ वा गन्धर्वाः सप्तविँशतिः॥ तेऽ अग्ग्रे श्श्वमायुञ्जँस्ते
ऽ अस्मिञ्जवमादधुः॥३॥ घृतङ्घृतपावानः पिबत व्वसां व्वसा
पावानः पिबतान्तरिक्षस्स्य हविरसि स्वाहा॥४॥ दिशः प्प्रदि
शऽ आदिशो व्विदिशऽ उद्दिशो दिग्भ्यः स्वाहा॥५॥ यावाङ्क

शामधुमत्यश्विंनासूनृतावती॥ तयायज्ञम्मिंमिक्षताम्॥५॥ अथदिक्पालमंत्राः॥ ॥त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम्॥ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः॥१॥ इतिअग्निमंत्रः॥ त्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः॥यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत्॥ यममंत्रः॥ असियमोऽअस्यादित्योऽअर्वन्नसित्रितोगुह्येनव्रतेन॥ असिसो

मैनसमयाविपृक्त ऽआहुस्तेत्रीणि दिवि बन्धनानि॥३॥ नैऋत
मंत्रः॥ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहि तस्क
रस्य॥ अन्यमस्मदिच्छसातऽइत्यानमोदेवि निर्ऋते तुभ्य
मस्तु॥४॥ वरुणमंत्रः॥ इमम्मे वरुण श्रुधीहवमद्या च मृडय॥
त्वामवस्युराचके॥५॥ आनो नियुद्भिः शतिनीभिरध्वरꣳ स
हस्रिणीभिरुपयाहि यज्ञम्॥ वायोऽअस्मिन्त्सवने मादयस्व
यूयम्पात स्वस्तिभिः सदा नः॥६॥ कुबेरमंत्रः॥ वयꣳ सोम व्रते

तवमनेस्तनूषु विभ्रंतः प्रजावन्तः सचेमहि ॥७॥ शिवमंत्रः ॥ तमी
शानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहे वयम् ॥ पूषा
नोयथावेदसामसद्वृधेरक्षिता पायुरदब्धः स्वस्तये ॥ ८ ॥ ब्रह्ममंत्रः
॥ ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोवेन ऽआवः ॥ स
बुध्न्या ऽउपमा ऽअस्य विष्ठाः सतश्चयोनिमसतश्च विवः ॥
॥ ९ ॥ शेषमंत्रः ॥ स्योनापृथिविनो भवानृक्षरा निवेशनि ॥ यच्छा
नः शर्म्मसप्रथाः ॥ १० ॥ अथ क्षेत्रपालमंत्रः ॥ नहिस्पशमविद

मंत्र न्नन्यमस्म्माद्वैश्वानरात्पुरऽएतारमग्ग्नेः॥एमैनमवृधन्नमृताऽ सं.
२४ अमर्त्त्यंवैश्वानरङ्क्षैत्रजित्यायदेवाः॥१॥अथअग्नेर्ध्यानमंत्रः
॥चत्वारिशृङ्गात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअस्य
॥त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्त्याँ२॥ऽआविवेश॥१॥अ
थाष्टाहुतिमंत्राः॥त्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअ-
वयासिसीष्ठाः॥यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाᳬंसि २४
प्रमुमुग्ध्यस्स्मत्॥२॥सत्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोऽअस्या

ऽउषसोव्युष्टौ॥अवंयश्चनोवरुणꣳरराणोवीहिमृडीकꣳसुहवोनः
एधि॥२॥इमम्मेवरुणश्रुधीहवमद्याचमृडय॥त्वामवस्युराचके॥
॥३॥तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः
॥अहेडमानोवरुणेहबोध्युरुशꣳसमानऽआयुःप्रमोषीः॥४॥येते
शतम्वरुणयेसहस्रंयज्ञियाःपाशाविततामहान्तः॥तेभिर्नोऽअद्यस
वितोतविष्णुर्विश्वेमुञ्चन्तुमरुतःस्वर्काः॥५॥अयाश्चाग्नेस्यन
भिशस्तिपाश्चसत्वमित्वमयाऽअसि अयानोयज्ञंवहास्ययानोधेहि

भेषजꣳस्वाहा॥६॥उदुत्तमम्वरुणपाशमस्म्मदवाधमंविमध्यमꣳ
श्रथाय॥अथाव्वयमादित्यव्रतेतवानागसोऽअदितयेस्स्याम॥७॥
भवतन्नःसमनसौसचेतसावरेपसौ॥मायज्ञꣳहिꣳसिष्टम्मायज्ञ
पतिञ्जातवेदसौशिवौभवतमद्यनः॥८॥अथबर्हिर्होममंत्रः॥देवा
गातुविदोगातुंवित्वागातुमित॥मनसस्पतऽइमन्देवयज्ञꣳस्वा
हावातेधाः॥९॥अथपूर्णाहुतिमंत्राः॥मूर्द्धानन्दिवोऽअरतिम्पृथि
व्व्यावैश्वानरमृतऽआजातमग्निम्॥कविꣳसम्म्राजमतिथिञ्ज

नानामासन्नापात्रं ञ्जनयन्तदेवाः॥१॥वसोःपवित्रमसिशतधा
रम्वसोःपवित्रमसिसहस्रधारम्॥देवस्त्वासवितापुनातुवसोःप
वित्रेणशतधारेणसुप्वा॥कामधुक्षः॥२॥पूर्णादर्विपरापतसु
पूर्णापुनरापत॥वस्नेवविक्रीणावहाऽइषमूर्ज्जंशतक्रतो पु
नेस्त्वादित्यारुद्रावसवःसमिन्धतांपुनर्ब्रह्माणोवसुनीथय
ज्ञैः॥घृतेनत्वन्तन्वम्वर्द्धयस्वसत्याःसन्तुयजमानस्यकामाः
॥४॥अथभस्मधारणमंत्रः॥त्र्यायुषञ्जमदग्नेःकश्यपस्यत्र्या

युषम्॥ यद्देवेषु आयुषंतन्नोऽ अस्तु आयुषम् ॥१॥ अथाभिषेक
मंत्रः॥ समुद्रज्येष्ठाः सलिलस्यमध्यात्पुनानायंत्यनिविशमानाः॥
इंद्रोयावज्रीवृषभोरराद ता॥ आपोदेवीरिहमामवन्तु ॥१॥ आऽ
आपो दिव्याऽउतवास्रवन्तिखनित्रिमा ऽउतवायाः स्वयंजाः॥
समुद्रार्थायाः शुचयः पावकास्ताऽ आपोदेवी रिहमामवन्तु॥२॥
यासांराजावरुणोयातिमध्येसत्यानृते अवपश्यंजनानां॥ मधुश्चु
तः शुचयोयाः पावकास्ता आपोदेवीरिहमामवन्तु॥ यासुराजाव

रुणोयासुसोमो विश्वेदेवा या।सूर्जंमदन्ति॥वैश्वानरोयास्वग्निः
प्रविष्टुस्ताऽआपोदेवी रिहमामवन्तु॥३॥ॐ भूः पुनातु ॐ भु
वः पुनातु ॐ स्वः पुनातु ॐ महः पुनातु ॐ जनः पुनातु ॐ तपः
पुनातु ॐ सत्यं पुनातु ॐ तत्सवितु.यात्॥सर्वपुनातु॥४॥ॐ आपो
हिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन॥महेरणायचक्षसे॥५॥योवः शि
वतमोरसस्तस्यभाजयतेहनः॥उशतीरिवमातरः॥६॥तस्माऽअ
रङ्गमामवोयस्यक्षयायजिन्वथ॥आपोजनयथाचनः॥७॥पुनन्तु

मा पितरः सोम्यासः पुनन्तु मा पितामहाः पवित्रेण शतायुषा ॥ पुन
न्तु मा पितामहाः पुनन्तु प्रपितामहाः ॥ पवित्रेण शतायुषा विश्व
मायुर्व्यश्नवै ॥ ८ ॥ अग्नऽआयूंषि पवसऽआसुवोर्ज्जमिषञ्च नः
आरे बाधस्व दुच्छुनाम् ॥ ९ ॥ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः
॥ पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥ १० ॥ पवित्रेण पुनीहि मा
शुक्रेण देव दीद्यत् ॥ अग्ने क्रत्वा क्रतूं ॥ रनु ॥ ११ ॥ यत्ते पवित्रमर्चि
ष्यग्ने विततमन्तरा ॥ ब्रह्म तेन पुनातु मा ॥ १२ ॥ पवमानः सोऽअद्य

नेः पुवित्रेण विचर्षणिः। यः पोता स पुनातु मा ॥२३॥ उभाभ्यां देव
सवितः पुवित्रेण सवेने च। मां पुनीहि विश्वतः ॥२४॥ वैश्वदेवी पु
नती देव्यागाद्यस्यामिमा बह्व्यस्तन्वो वीतपृष्ठाः ॥ तया मदन्तः स
धमादेषु वयꣳ स्याम पतयो रयीणाम् ॥२५॥ चित्पतिर्म्मा पुनातु
वाक्पतिर्म्मा पुनातु देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्य्य
स्य रश्मिभिः ॥ तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने त
च्छकेयम् ॥२६॥ या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः ॥ ता

सामसित्वमुत्तमारङ्गामायुग्राꣳहृदे॥१७॥याऽओषधीꣳसोमरा
ज्ञीर्विष्ठिताꣳपृथिवीमनु॥बृहस्पतिप्रसूताऽअस्यैसन्दत्तवी
र्य्यम्॥१८॥व्वयꣳसोमव्रतेतवमनस्तनूषुविभ्रतः॥प्रजावन्तः
सचेमहि॥१९॥त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमि
न्द्रम्॥ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः
॥२०॥देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ता
भ्याम्॥सरस्वत्यैवाचोयन्तुर्य्यन्त्रियेदधामिबृहस्पतेष्ट्वासा

म्म्राज्ज्येनाभिषिञ्चाम्यसौ ॥२१॥ देवस्य त्वा सवितुः प्प्रसवेऽश्वि
नोर्ब्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥ सरस्वत्यै वाचो यन्तुर्य्यन्त्रेणा
ग्नेः साम्म्राज्ज्येनाभिषिञ्चामि ॥२२॥ देवस्य त्वा सवितुः प्प्रसवे
ऽश्विनोर्ब्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥ अश्विनोर्भैषज्ज्येन तेजसे
ब्रह्मवर्च्चसायाभिषिञ्चामि ॥ सरस्वत्यै भैषज्ज्येन वीर्य्यायान्ना
द्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण बलाय श्श्रियै यशसेऽभिषिञ्चामि
॥२३॥ कोसि कतमोसि कस्मै त्वा काय त्वा ॥ सुश्लोक सुमङ्गल स

त्त्वेराजन्॥२४॥शिरो मे श्रीर्य्यशो मुखन्त्विषिः॥केशाश्च श्मश्रूणि राजा मे प्राणोऽअमृतꣳ सम्म्राड्चक्षुर्व्विराट् श्रोत्रम्॥२५
॥जिह्वा मे भद्रंवाङ्महो मनो मन्युः स्वराड्भामः॥मोदाः प्रमोदाऽअङ्गुलीरङ्गानि मित्त्रं मे सहः॥२६॥बाहू मे बलमिन्द्रियꣳ हस्तौ मे कर्म्म वीर्य्यम्॥आत्त्मा क्षत्त्रमुरो मम॥२७॥पृष्ठीर्म्मे राष्ट्रमुदरमꣳसौ ग्रीवाश्च श्रोणी॥ऊरूऽअरत्नी जानुनी विशो मेऽङ्गानि सर्व्वतः॥
॥२८॥नाभिर्म्मे चित्तं विज्ञानं पायुर्म्मेऽपचितिर्भसत्॥आनन्द

नन्दावांडोमेभगः सौभाग्यम्म्यसं÷जङ्घाभ्यांपद्भ्यान्धर्म्मोस्मि
विशिराजाप्प्रतिष्ठितः॥२९॥प्रतिक्षत्त्रेप्प्रतितिष्ठामिराष्ट्रेप्प्रत्य
श्वेषुप्प्रतितिष्ठासिगोषु॥प्प्रत्यङ्गेषुप्प्रतितिष्ठाम्यात्त्मन्प्प्रतिप्प्रा
णेषुप्प्रतिष्ठासिपुष्टेप्प्रतिद्यावापृथिव्योःप्प्रतितिष्ठामियज्ञे॥३०
॥द्यौःशान्तिरन्तरिक्षथ्ठंशान्तिःपृथिवीशान्तिरापःशान्तिरोष
धयःशान्तिः॥वनस्प्पतयःशान्तिर्विश्वेदेवाःशान्तिर्ब्रह्मशा
न्तिःसर्वथ्ठंशान्तिःशान्तिरेवशान्तिःसामाशान्तिरेधि॥३१॥

अथदेवतामंत्रः॥नमः॑ शम्भवायच मयोभवाय॑च॒नमः॑ शङ्कराय॑
च मयस्क॒राय॑च॒नमः॑ शि॒वाय॑च शि॒वतरायच॥१॥ विष्णुमन्त्रः॥
इ॒दंविष्णु॒र्वि॒च॑क्रमे त्रे॒धानिद॑धे प॒दम्॥समू॑ढमस्स्यपा॒ꣳसु॒रेस्स्वा
हा॥२॥ देवीमंत्रः॥अम्बे॒ऽअम्बि॒केम्बालि॒के॒नमा॑नयति॒कश्च॒न॥
ससेस्त्यश्व॒कः सु॒भद्रिकाङ्काम्पीलवा॒सिनी॑म्॥३॥गणेशमंत्रः॥ग॒
णानां॑त्वाग॒णप॑तिꣳहवामहे प्रि॒याणां॑त्वा प्रि॒यप॑तिꣳहवाम
हे निधी॒नां॑त्वा नि॒धिप॑तिꣳहवामहेवसोमम॥ आहमजानिग॒

धमात्वमेजासिगर्भधं॥ सूर्य्यमंत्रः॥ आकृष्णेनरजसावर्तमानो
निवेशयन्नमृतम्मर्त्यंञ्च॥ हिरण्ययेनसवितारथेनादेवोयातिभु
वनानिपश्यन्॥५॥ त्र्यंबकमंत्रः॥ त्र्यंबकंयजामहेसुगन्धिम्पुष्टि
वर्द्धनम्॥उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात्॥६॥ब्र
ह्ममंत्रः॥ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेनऽआ
वः॥सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः
॥७॥स्कन्दमंत्रः॥यदक्रन्दःप्रथमंजायमानऽउद्यन्त्समुद्रादुत

मंत्र ३१

वापुरीषात्॥श्येनस्त्वं पक्ष्याहरिणस्त्वंबाहूऽउपेस्तुत्यम्महिजा
तन्तेऽअर्घेन्॥८॥सर्पमंत्रः॥नमोस्तुसर्पेभ्योयेकेचपृथिवीमनु
॥येऽअन्तरिक्षेयेदिवितेभ्यःसर्पेभ्योनमः॥९॥हनुमानमंत्रः
॥अस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः॥यःशंसं
सतेस्तुवतेधायिपज्रऽइन्द्रज्ज्येष्ठाऽअस्म्माऽअवन्तुदेवाः
॥१०॥सप्तऋषिमंत्रः॥सप्तऽऋषयःप्रतिहिताःशरीरेसप्तर
क्षन्तिसदमप्रमादम्॥सप्तापःस्वपतोलोकमीयुस्तत्रजागृ

सं ३

तोऽ अस्त्वं प्रजौ सत्र्व सदौञ्च देवौ ॥११॥ ध्रुवमंत्रः ॥ ध्रुवक्षितिर्ध्रुव
योनिर्ध्रुवासि ध्रुवं योनिमासीद साधुया ॥ उख्यस्य केतुम्प्रथ
मंञ्जुषाणाश्विनाध्वर्यू सादयतामिहत्वा ॥१२॥ भूतमंत्रः ॥ भूता
येत्वा नारातये स्वरभिविख्येषन्दृंहन्तां दुर्य्याः पृथिव्यामुर्वु
न्तरिक्षमन्वेमि पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थे
ग्नेहव्यं रक्ष ॥१३॥ विश्वकर्मा मंत्रः ॥ विश्वकर्मन्हविषा वर्द्धनेन
त्रातारमिन्द्रमकृणोरवध्यम् ॥ तस्मै विशः समनमन्त पूर्वीरय

मुग्रोधिहन्यो यथासत् ॥१४॥ अगस्तिमंत्रः ॥ कुम्भो वेनिष्टुर्ज्जनि
ताशचीभिर्य्यस्मिन्नग्रे योन्याङ्गर्भ्योऽअन्तः ॥ प्लाशिर्व्यक्तः
शतधारऽउत्सोदुहेनकुम्भीस्वधाम्पितृभ्यः ॥१५॥ कालिमंत्रः ॥
कन्न्याऽइववहतुमेतवाऽउऽअञ्ज्यञ्जानाऽअभिचाकशीमि ॥ यत्र
सोमः सूयते यत्र यज्ञो घृतस्स्य धाराऽअभितत्पवन्ते ॥१६॥ लक्ष्मी
मंत्रः ॥ श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वेनक्षत्राणि रूपमश्वि
नौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण ॥१७॥

सरस्वती मंत्रः ॥ पञ्चनद्यः सरस्वतीमपियन्ति सस्रोतसः सरस्वती तु पञ्चधा सो देशे भवत्सरित् ॥१८॥ पृथ्वी मंत्रः ॥ स्योना पृथिवि नो भवानृक्षरा निवेशनी ॥ यच्छा नः शर्म्म सप्रथाः ॥१९॥ आप मंत्रः ॥ अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे ॥ गर्भ्ये सञ्जायसे पुनः ॥२० ॥ तेज मंत्रः ॥ अग्निन्दूतम्पुरो दधे हव्यवाहमुपब्रुवे ॥ देवाँ२ ॥ऽ आसादयादिह ॥२१॥ वायु मन्त्रः ॥ वातो वा मनो वा गन्धर्वाः सप्तविंशतिः ॥ तेऽअग्रेश्वमयुञ्जँस्तेऽअस्मिञ्जवमादधुः ॥२२॥ आका-

शामंत्रः॥यावाङ्कशामधुमत्यश्विनासूनृतावती॥तयायज्ञम्मिमिक्ष
ताम्॥२३॥देवतापत्नीमंत्रः॥तम्पत्नीभिरनुगच्छेमदेवाःपुत्रैर्भ्रा
तृभिरुतवाहिरण्यैः॥नाकङ्गृभ्णानाःसुकृतस्यलोकेतृतीयेपृष्ठे
ऽअधिरोचनेदिवः॥२४॥ऋग्वेदमंत्रः॥अग्निमीळेपुरोहितंयज्ञस्य
देवमृत्विजम् होतारंरत्नधातमम्॥२५॥यजुर्वेदमंत्रः॥इषेत्वोर्ज्जे
त्वावायवस्थदेवोवःसवितापार्प्पयतुश्रेष्ठतमायकर्म्मणऽआ
प्यायध्वमघ्न्याऽइन्द्रायभागम्प्रजावतीरनमीवाऽअयक्ष्मामा

वस्तेनऽईशतमाघशंथंसोढुवाऽअस्मिन्नोपतीस्यातवहीव्यो
जेमानस्स्यपुथून्मोहि॥२६॥ सामवेद मंत्रः॥अग्नुऽआयाहि वीतये
गृणानोहव्यदातये निहोतोसत्सिबर्हिषि॥२७॥ अथर्वणमंत्रः॥श
न्नोदेवीरभिष्टयऽआपा भवन्तुपीतये शंयोरभिस्त्रवन्तुनः॥२८॥
वास्तुमंत्रः॥वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशोऽअनमीवो भवा
नः यत्वेमहे प्रतितन्नोजुषस्वशन्नो भवद्विपदेशंचतुष्पदे॥२९॥
समुद्रमंत्रः॥समुद्रोसिनभस्वानार्द्रदानुःशम्भूर्म्मयोभूरमिमा

वाहिस्वाहा॥मारुतोसिमरुताङ्गणःशम्भूर्म्मयोभूरभिमावाहि
स्वाहा॥वस्स्यूरसिदुवस्स्वाञ्छम्भूर्म्मयोभूरभिमावाहिस्वाहा
॥३०॥पर्वतमंत्रः॥प्रपर्वतस्स्यवृषभस्स्यपृष्ठान्नावश्चरन्तिस्व
सिचेऽइयानाः।ताऽआववृत्रन्नधरागुदक्ताऽअहिम्बुध्न्यमनुरीय
माणाः॥विष्णोर्विक्रमणमसिविष्णोर्विक्रान्तमसिविष्णोःक्रा
न्तमसि॥३१॥संवत्सरमंत्रः॥संवत्सरोसिपरिवत्सरोसीदावत्सरो
सीद्वत्सरोसिवत्सरोसि॥उषसस्तेकल्पन्तामहोरात्रास्तेकल्पन्ता

मर्द्धमासास्तेकल्प्यन्ताम्मासास्तेकल्प्यन्तामृतवस्तेकल्प्यन्ताꣳसं
वत्सरस्तेकल्प्यताम्॥३२॥ ऋतुमंत्रः॥ वसन्तेनऽऋतुनादेवावसव
स्त्रिवृतास्तुताः रथन्तरेणतेजसाहविरिन्द्रेवयोदधुः॥३३॥ ग्री
ष्मेणऽऋतुनादेवारुद्राः पञ्चदशेस्तुताः बृहतायशसाबलꣳहवि
रिन्द्रेवयोदधुः॥३४॥ वर्षाभिर्ऋतुनादित्यास्तोमेसप्तदशेस्तुताः
वैरूपेणविशौजसाहविरिन्द्रेवयोदधुः॥३५॥ शारदेनऽऋतुनादेवाऽ
एकविꣳशऽऋभवस्तुताः वैराजेनश्रियाश्रियꣳहविरिन्द्रेवयोव

योदधुः॥३६॥हेमन्तेनऽऋतुनादेवास्त्रिणवेमरुतस्तुताः॥बलेनशक्व
रीःसहोहविरिन्द्रेवयोदधुः॥३७॥शैशिरेणऽऋतुनादेवास्त्रयस्त्रिꣳ
शेमृतास्तुताः॥सत्येनरेवतीःक्षत्रꣳहविरिन्द्रेवयोदधुः॥३८॥मासु
मंत्रः॥अर्द्धमासाःपरूꣳषितेमासाऽआच्छ्यं तुशम्म्यन्तः॥अहोरा
त्राणिमरुतोविलिष्टꣳसूदयन्तुते॥३९॥पक्षमंत्रः॥इमौतेपक्षावज
रौपतत्रिणौयाभ्याꣳरक्षाꣳस्यपहꣳस्यग्ने॥ताभ्यांपतेम
सुकृतामुलोकंयत्रऽऋषयोजग्मुःप्रथमजाःपुराणाः॥४०॥शु

क्लपक्षमन्त्रः॥ अग्नेः पक्षतिर्वायोर्निपक्षतिरिन्द्रस्य तृतीया सोमस्य
चतुर्थ्यदित्यै पञ्चमीन्द्राण्यै षष्ठी मरुताᳬ सप्तमी बृहस्पतेरष्टम्यर्य्य
म्णो नवमी धातुर्दशमीन्द्रस्यैकादशी वरुणस्य द्वादशी यमस्य त्रयो
दशी॥४१॥ कृष्णपक्षतिथिमन्त्रः॥ इन्द्राग्न्योः पक्षतिः सरस्वत्यै निप
क्षतिर्मित्रस्य तृतीयापाञ्चतुर्थी निर्ऋत्यै पञ्चम्यग्नीषोमयोः षष्ठी
सर्प्पाणाᳬ सप्तमी विष्णोरष्टमी पूष्णो नवमी त्वष्टुर्दशमीन्द्रस्यैका
दशी वरुणस्य द्वादशी यम्यै त्रयोदशी द्यावापृथिव्योर्दक्षिणम्पा

श्वैविश्वेषान्देवानामुत्तरम्॥४२॥ दिनमंत्रः॥ अन्हे पारावतानालभते
राञ्यै सीचापूरहोरात्रयोः सन्धिभ्यो जतूर्म्मासेभ्यो दात्योहान्त्संवत्सराय महतः सुपर्णान्॥४३॥ अथनक्षत्रमंत्राः॥ तत्र अश्विनीमंत्रः॥ यावाङ्कशामधुमत्याश्विनासुनृतावती॥ तयायज्ञम्मिमिक्षताम्॥ भरणीमंत्रः॥ यमायत्वामखायत्वासूर्यस्यत्वातपसे॥
देवस्त्वासवितामध्वानक्तुपृथिव्यासंस्पृशस्पाहि॥ अर्चिरसिशोचिरसितपोसि॥ ॥कृत्तिकामंत्रः॥ अग्निन्दूतम्पुरोदधेहव्यवाह

मुपंह्वये॥देवाँ२॥ऽआसोदयादिह॥३॥रोहिणीमंत्रः॥प्रजापतेनत्वदेता
न्यन्यो विश्वारूपाणिपरिताबभूव॥यत्कामास्तेजुहुमस्तन्नोऽअस्त्वय
ममुष्यपितासावस्य पितावयथंस्स्यामपतयोरयीणाथंस्वाहा॥मृग
शिरामंत्रः॥सोमोधेनुथंसोमोऽअर्वन्तमाशुथंसोमोवीरङ्कर्मण्यन्द
दाति॥सादन्यंविदथ्य सभेयम्पितृश्रवणंय्योददाशदस्मै॥५॥आर्
द्रामंत्रः॥इमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः॥यथाश
मसंहिपदेचतुष्पदेविश्वम्पुष्टङ्ग्रामेऽअस्मिन्ननातुरम्॥६॥पुनर्वसुमंत्रः॥

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्माता स पिता स पुत्रः। विश्वे देवा ऽ अदि
तिः पञ्च जना ऽ अदितिर्ज्जातमदितिर्ज्जनित्वम् ॥७॥ पुष्यमंत्रः॥ बृहस्पते
ऽ अति यदर्य्यो ऽ अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु॥ यद्दीदयच्छवस ऽ ऋतप्र
जात तदस्मासु द्रविणन्धेहि चित्रम् ॥८॥ अश्लेषामंत्रः॥ नमोस्तु सर्प्पेभ्यो
ये के च पृथिवीमनु॥ ये ऽ अन्तरिक्षे ये दिवि तेभ्यः सर्प्पेभ्यो नमः॥९॥ मघा
मंत्रः॥ उदीरतामवर ऽ उत्परास ऽ उन्मध्यमाः पितरः सोम्म्यासः। असुं य
ऽ ईयुरवृका ऽ ऋतज्ञास्ते नो ऽवन्तु पितरो हवेषु॥१०॥ पूर्वामंत्रः॥ भगप्प्रणेत

र्भगसत्यराधो भगेमान्धियमुदवाददन्नः॥ भगप्रणोजनयगोभिरश्वैर्भ
गप्रनृभिर्न्नृवन्तः स्याम॥११॥ उत्तरामंत्रः॥ अर्य्यमणम्बृहस्पतिमिन्द्रन्दा
नायचोदय॥ वाचंविष्णुᳬंसरस्वतीᳬंसवितारञ्चवाजिनᳬंस्वाहा॥१२॥
हस्तमंत्रः॥ उदुत्यञ्जातवेदसन्देवंवहन्तिकेतवः॥ दृशेविश्वायसूर्य्यम्॥१३॥ चि
त्रामंत्रः॥ त्वष्टातुरीपोऽअद्भुतऽइन्द्राग्नीपुष्टिवर्द्धना॥ द्विपदाछन्दऽइन्द्रिय
मुक्षागौर्न्नवयोदधुः॥१४॥ स्वातिमंत्रः॥ वायुरग्ग्रेगायज्ञप्रीः साकङ्गन्म
नसायज्ञं॥ शिवोनियुद्भिः शिवाभिः॥ विशाखामंत्रः॥ इन्द्राग्नीआगतᳬं

मंत्र ३८

सुतङ्गीभिर्न्नभोवरैण्यम्॥अस्य पातन्धियेषिता॥१६॥अनुराधामंत्रः॥नमो
मित्रस्य वरुणस्य चक्षसे महोदेवाय तदृतथंसपर्यत॥दूरेदृशेदेवजाताय
केतवे दिवस्पुत्राय सूर्य्याय शथंसत॥१७॥ज्येष्ठामंत्रः॥त्रातारमिन्द्रमवितार
मिन्द्रथंहवेहवे सुहवथंशूरमिन्द्रम्॥कयामिशक्रम्पुरुहूतमिन्द्रथंस्व
स्ति[illegible]मघवा धात्विन्द्रः॥१८॥मूलामंत्रः॥माताचते पिताचते अग्रंवृक्ष
स्य रोहतः॥प्रतिलामीतिते पिता गभेमुष्टिमतथंसयत्॥१९॥पूर्वाषाढा
मंत्रः॥अपोधमदभिशस्तीरशस्तिहाथेन्द्रो द्युम्न्याभवत्॥देवास्त्वऽइन्द्र

३८

सुकव्याप्नेये मिरेव्हहेड्डानो मरुद्गण॥२०॥उत्तराषाढामंत्रः॥विश्वेदेवासऽआ
गतश्शृणुतामऽइमꣳहवम्॥एदम्बर्हिर्न्निषीदत॥२१॥श्रवणमंत्रः॥विष्णोर
राटमसिविष्णोः श्नप्त्रेस्थोविष्णोः स्स्यूरसिविष्णोर्ध्रुवोसि॥वैष्णवमसि
विष्णवेत्वा॥२२॥धनिष्ठामंत्रः॥वसोः पवित्रमसिद्यौरसिपृथिव्व्यसिमातरिश्वे
नोघर्म्मोसिविश्वधाऽअसि॥परमेणधाम्नादृꣳहस्वमाह्वार्म्मातेय
ज्ञपतिर्ह्वार्षीत॥२३॥शततारकामंत्रः॥वरुणस्स्योत्तम्भनमसिवरुणस्य
स्कम्भसर्ज्जनीस्थोवरुणस्स्यऽऋतसदन्न्यसिवरुणस्यऋतसदनम

सिद्वरुणस्यऽऋतसदनमासीद॥२४॥पूर्वभाद्रपदामंत्रः॥त्वन्नोऽअग्नेवरु
णस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः॥यजिष्ठोवन्हितमःशोशु
चानोविश्वाद्वेषाᳬंसिप्रमुमुग्ध्यस्मत्॥२५॥उत्तराभाद्रपदामंत्रः॥अ
हिरिवभोगैःपर्य्येतिबाहूञ्ज्यायाहेतिम्परिबाधमानः॥हस्तघ्नोविश्वो
वयुनानिविद्वान्पुमान्पुमाᳬंसम्परिपातुविश्वतः॥२६॥रेवतीमंत्रः॥पू
षन्तवव्रतेवयन्नरिष्येमकदाचन॥स्तोतारस्तऽइहस्मसि॥२७॥ ॥
इतिश्रीवेदपाठमंत्रसंहितासमाप्ता॥ ॥शुभमस्तु॥ ॥ ॥

॥ इति माध्यंदिनीयमंत्रसंहितासमाप्तिः ॥